# ॥ त्रिवेणीस्तोत्रम् ॥

मुक्तामयालङ्कृतमुद्रवेणी भक्ताभयत्राणसुबद्धवेणी ।

मत्तालिगुञ्जन्मकरन्दवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥ १ ॥

लोकत्रयैश्वर्यनिदानवेणी तापत्रयोच्चाटनबद्धवेणी ।

धर्मा-ऽर्थकामाकलनैकवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥ २ ॥

मुक्ताङ्गनामोहन-सिद्धवेणी भक्तान्तरानन्द-सुबोधवेणी ।

वृत्त्यन्तरोद्वेगविवेकवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥ ३ ॥

दुग्धोदधिस्फूर्जसुभद्रवेणी नीलाभ्रशोभाललिता च वेणी ।

स्वर्णप्रभाभासुरमध्यवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥ ४ ॥

विश्वेश्वरोत्तुङ्गकपर्दिवेणी विरिञ्चिविष्णुप्रणतैकवेणी ।

त्रयीपुराणा सुरसार्धवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥ ५ ॥

माङ्गल्यसम्पत्तिसमृद्धवेणी मात्रान्तरन्यस्तनिदानवेणी ।

परम्परापातकहारिवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥ ६ ॥

निमज्जदुन्मज्जमनुष्यवेणी त्रयोदयोभाग्यविवेकवेणी ।

विमुक्तजन्माविभवैकवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥७॥

सौन्दर्यवेणी सुरसार्धवेणी माधुर्यवेणी महनीयवेणी ।

रत्नैकवेणी रमणीयवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥८॥

सारस्वताकार-विघातवेणी कालिन्दकन्यामयलक्ष्यवेणी ।

भागीरथीरूप-महेशवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥९॥

श्रीमद्भवानीभवनैकवेणी लक्ष्मीसरस्वत्यभिमानवेणी ।

माता त्रिवेणी त्रयीरत्नवेणी श्रीमत्प्रयागे जयति त्रिवेणी ॥१०॥

त्रिवेणीदशकं स्तोत्रं प्रातर्नित्यं पठेन्नरः ।

तस्य वेणी प्रसन्ना स्याद् विष्णुलोकं स गच्छति ॥११॥

॥इति श्रीमच्छङ्कराचार्यकृतं त्रिवेणीस्तोत्रं सम्पूर्णम्॥